धनधान्यावकाशे धनंहिरण्यादि स्थिरादि धान्य-
स्थिरादि गोष्ठ वा पल्वे वा गोष्ठं गोष्ठ्यायेति
कल्प्याः द्वारमध्येन्तरिक्षाय स्वाहावान्तरिक्षाय
स्वाहेति पदच्छेदः वास्तुमध्ये ब्रह्मस्थाने इत्यर्थः
दक्षिणतः इति ब्रह्मस्थानापेक्षं ब्रह्मस्थानस्य चिण-
इत्यर्थः अथ दिशु ब्रह्मस्थानावान्तरदिक्षिति
तथैव धोषौ गत्वार्थः संवरणदेशे द्वारपिधानार्थं
काष्ठं पार्श्वे स्थापितं तथा यारास्तम्भः देहं
न्यामन्तारिक्षे लिङ्गेणोत्तरे पिधान्यमिति ॥



— द्वितीयेऽध्यमः —

अथ वैश्वदेवं हुत्वेत्यादि बलिहरणानन्तरमेव
यदधीते स ब्रह्मयज्ञ इत्यारभ्यते । पञ्चमहायज्ञामिति
वचनं बलिहरणार्थं तानेवानुवदन्ति केचित । अन्ये
बलिहरणानन्तरोर्ध्वाद्दिगभूतः पञ्चसन्ति यज्ञो
यदग्नौ जुहोत्यपि समिधमिति सामिहोमो बलिहरणे
नास्ति यत्पितृभ्यः स्वधा करोति इति केवलं स्वधाकारो
नास्ति यद्भूतेभ्यो बलिं हरतीति च भूतबलिं सद्य-
कश्च नास्ति तस्मिन् पृथगेव पञ्चमहायज्ञ इति
बलिहरणादिका गम्यते तथाह पारिभाषायां
वक्ष्यति तस्माद्यस्माद्विक्रमणं पञ्चमहायज्ञ इति

बलिहरणात्पूर्वं पृथगेव कर्तव्या इत्याह हरदत्तः देवेभ्यः
स्वाहाकारं कुर्यादिति वचनादन्यस्याश्च देव-
ताया ओङ्कारादेव देवतेति गम्यते। यस्मा-
देवेभ्यः स्वाहेति मन्त्रवत्पितृभ्यस्तथा करोति
इत्योदनाकारस्यैव इति वचनात् पितृभ्यस्स्वधेति
यद्भूतेभ्यो बलिं हरति नमस्कारमाप्नुभ्य
इति वचनाद्भूतेभ्यो नम इति मन्त्रः स्यात् ब्राह्म-
णेभ्योऽन्नं ददातीति वचनान्मनुष्ययज्ञो दानं
मूलशाकादि मनुष्ययज्ञः यत्स्वाध्यायमधीयीतैका-
मप्यृचं यजुस्साम वेति वचनात् ब्रह्मयज्ञ ओङ्कार-
व्याहृतिभ्यः इति च ब्रह्मयज्ञ इति तस्यामाने
क्रमेणं पञ्चमहायज्ञ इति वचनात्पुरुषार्थ इति
गम्यते पुरुषार्थश्चेत् स्नानादिवत्सानुप्रयोगे
णैवाहरहः कृतार्थ इति गम्यते मनुष्ययज्ञ इति
वचनात् सायमपि कर्तव्यं वचनानि दृश्यते
सायं प्रातर्यदन्योन्येन वैश्वदेवं बलिमुपहृत्य
ब्राह्मणक्षत्रियविट्शूद्रानभ्यागतान्यथाशक्त्या
पूजयेदिति सायमागतमतिथिं नावरुन्ध्यादिति
यावद्गृहस्थस्य वैश्वदेवं कृत्वा गां दत्वा कालयोः
भोजनं मनुजमिति आपस्तम्बश्चाह अङ्गिरसा

गृहे भुञ्जीत शेषातिथिभ्य इति गौतमआह ।
अधिवृक्ष सूर्यो पस्थायी इति रतिथिओभयोरावर्तते
अपाचार्यआह रह रैतेभ्यः स्वाहाकुर्यादिति महरहः
शब्दमेव प्रयुक्तवान् सायं प्रातर्मनुष्यवर्जमृतुर्णां
सकृथ योग इति एवं पञ्चमहायज्ञान् समाप्य .
बलिहरणं च कृत्वातिथिमाकाङ्क्षेदिति अतिथि स्वरूपं
परिभाषायाँ वक्ष्यति । श्रान्तोऽदृष्टपूर्वोऽश्रुत इति
केवलमन्त्रार्थं स्यादिना आगोदोहकालमाकाङ्क्षेत-
इत्यर्थः । अग्नामुधृत्य वेति सिद्धो दधात् इति
वचनान्तकेवलमुत्तारणेनानेन तदा आहुते मनुष्य -
यज्ञस्यादिति एवमर्थादधीहि भो इत्यर्थसम्बोधनं
प्रैषमनुकृत्वा प्राणं कृत्वा प्राणायामैस्त्रिराथम्येहा-
रभ्यते । तथाहापस्तम्बः । ओङ्कारं स्वं द्वारं
तस्माद्ब्रह्माध्ययजणान् एतदादि प्रतिपद्यते इति
गौतमश्च तथाह । आदितो ब्रह्मण आदान
ओङ्कारोत्यनापीति पाणिना यापुनतविधान औं
मध्यादान इत्युक्तं आचार्यप्रैषोत्तरकालं
प्रणवं दर्शयिति । गायत्रीं भो अनुब्रूहीति
तस्मादन्वाहोमिति प्रतिपद्यते । प्राणायामस्वरूपोपादि
वसिष्ठः तावत्समन्त्रकां व्याहृतिकां सप्रणवां

यद्व ग्रकोवि जायत इत्यपि शङ्काह्यहं त्वहं वा प्रमादादकृतेष्वतरत्र सर्वश इति वक्तारित्यपु मनुषु चेत्यर्थः इति स्तस्तं तुमतारत्नतुं तन्वन्तु-ध्यस्वाग्नेस्त्रयस्त्रिंशत तन्तव इति यतस्तो वारुणीर्जपेदिमं मे । वरुण तत्वायामि त्वं नो अग्ने स त्वं नो अग्ने इत्येतामध्वरदीक्षाप्रायश्चित्त-मुक्तः यत्स्त्रोभ्यां वर्तिनीरिति अग्नेभ्यावर्ति अग्ने अङ्गिरः पुनरूर्जा सहरय्येति तनुमतकारः याज्यानुवाक्ये त्वं नस्तन्तु श्रियं कृण्वान इति यद्व समुच्चयः इष्टेभ्यस्त्वाहेत्यादयः प्रवासं गच्छतो यस्य गृहे कर्ता न विद्यते इत्यर्थः तदानीं तैस्सह गच्छति यदन्नमुपपद्यते तेनेत्यर्थः। अङ्गिरेव व्रतं कुर्याद्भोजनं कुर्यादित्यर्थः। अन्तान्तरा भोजन प्रतिबन्धो नास्ति। दर्शयति तानेतास्र क्षेत्यायस्ते तानेतान्वैश्वदेवकर्मणो मन्त्रानित्यर्थः तेषां वैश्वदेव-स्य मन्त्राणां ग्रहणं अध्ययनेनेत्यर्थः उक्तेपरा उक्तेणमन्त्रौ ये भूताः प्रचरन्ति नक्तमित्येताभिरि-र्थः बलिहरणं व्याख्यातम्। बलिहरणाधिकारो निवृत्त इत्यपि स्थापितः ॥

— इति द्वितीये नवमः —

चर्भिप्येन। शारदानि शरदि भवानि सन्धि-
वेलानृतूनन्तेभ्यो हैमन्तिकानि हेमन्ते भवानि
छन्दांसि वसन्ताच्चेति अधाधिमासे अधिमास
इत्यर्थः अस्ति त्रयोदशो मासः इत्यौत्रिधिः
करणात्रेति लभ्यते न स्वरूपः शक्यत्वा द्वादश
एव मासाः कर्तव्यः अग्रायणसन्निपाते आग्रयणं
कृत्वा शारदकर्मारभ्यते येनौनानां विधेभिर्नैर्बहुरूपै-
रित्यर्थः स एव आधारवान्वेक्षनुक्रामे प्रदर्शना-
र्थमादिमध्यावसानामुक्ताः। सर्वत्रप्रदर्शितं
प्रत्यवरोहणानन्तरं सर्वत्र दर्शितमिति व्याख्यापयति।
प्रत्यवरोहणं व्याख्यातमिति ब्रुवन्नधिकारो
निवृत्त इति व्याख्यापयति ॥

—— इति द्वितीये दशमः ——

अथाष्टका होमः। अथ शब्द आनन्तर्यमिति उदिति
शब्दो भेदअसंज्ञाव इत्युपकल्प्यत इव अशनादष्टका
होमोऽश्वः कार्यः। तस्मात्पूर्वेद्युर्निमन्त्रणं कर्तव्यमिति
तथा चाऽऽपस्तम्बः। पूर्वेद्युर्निमन्त्रणमपरेद्युर्द्वितीय -
तृतीयमामन्त्रणान्तिः प्रायश्चमेके श्राद्ध उपदिशन्ति
अथा प्रयत्नेन द्वितीयं येति अनर्थायार्थवचनं
पूर्वेद्युः प्राक्तरेवेत्यारभ्य वा भोजनमिति स्वयं ब्राह्म-

नस्य भोजनं न कुर्यात- योनिगोत्रश्रुतवृत्त-
सम्पन्नानित्याहापस्तम्बाचार्यः। ब्राह्मणान्
ब्रह्मविदो योनिगोत्रमन्त्रान्तेवास्यसम्बन्धां
गुणहान्यां तु परेषां सम्पदेत सोदरोऽपि भोज-
यितव्यः तुल्य इत्यर्थः। गुणेषु च यो वृद्धसेयानि-
ति गौतमवचनं न चैतेन भिन्नकर्मकुर्यात्-
इति ब्रुवन् पूर्वैर्युर्निमन्त्रणं दर्शयति ब्राह्मणा-
न्विषमसंख्यानाचार्येणोक्तं युग्मायुग्मामिति समं
विषमं यथैव दैवं पित्र्यं कर्म स्यातमिति
अस्यसिद्धमानीय युग्मान् ब्राह्मणानिति उरसः
पितर इत्यर्थं द्वौ दैवे त्रीन् पित्र्ये
गौतमो वक्ष्यति नरवान् भोजयेत् अयुग्मो
यथोत्साहमित्यादि वशिष्ठश्च द्वौ दैवे पितृकार्ये
त्रीनिति वृद्धपूर्वेषु सुकृत्वात्। नान्दीमुखं न
कर्तव्यं तत्सम्बन्धेन श्रवणात्पुण्याहं च नास्ति
श्वो भूतेन प्राचीनावीति त्रिस्त्राणीति वचनात्
सश्मश्रु कर्मसादिमृज्य दूर्वादीनभिधार्यो ब्राह्म
प्रातिष्ठितमाभिधार्य युग्मान् वा ब्राह्मणानेकारभ्य
अनुज्ञात इतः कृत्वा ततो यज्ञोपवीती परिधान-
प्रभृत्याग्निमुखं कृत्वा ततः प्राचीनावीति पश्च

ऋद्धि पूर्तेषु

दृष्टा हविर्गुणान् याबद्दुष्णं भवत्यन्नं याव-
दुष्णीं नाश्यते तावद्धि पितरोऽश्नन्ति यावन्नोक्ता
हविर्गुणा इति भोजने मनुवचनं राजतैर्भाजनैः
ऊपमापि वा राजतान्वितैर्वापि श्रद्धया दत्त-
मक्षयायोपकल्पते । इत्यादि मन्वाद्याचार्याणां होमः
कारयितं चण्डालश्च वराहश्च कुक्कुटश्च तथैव च
रजस्वला च षण्ढश्च नेक्षेरन् नश्नतो द्विजान्।
होमप्रदाने भोज्येऽपि यदेतैरपि वीक्षितं दैवे कर्मणि
पित्र्ये वा तद्गच्छत्ययथा गतं अनध्ययतस्याल्यो-
ऽपपर्यस्थोभावेन विधातव्यः कस्य होतव्यस्याल्पापु
निवपते इत्यसमर्हति तस्याल्पस्य पितॄणामयमस्य
इत्येवं प्रत्याद्याभिधानात् स्थानभेदानामन्त्र निवृत्तिः
न्यायात्तथापि ब्राह्मणानां त्वविद्यावतामिति बहुवचन-
निर्देशात् पितृपितामहप्रपितामहानां च योग-
पद्य दर्शनात् । सकृदेव मन्त्रमुक्त्वा सर्वेषां
अभिमर्शनं कर्तव्यमिति । अथैतानि भोजनपात्र-
स्थितान्यन्नानि ब्राह्मणेभ्यः कृतेष्वामन्त्रणेषु
तिलसिक्तानि अग्निस्सम्प्रकीर्णेषु प्रोक्षितेषु
परिविष्योपनिधायेत्यर्थः ब्राह्मणस्याङ्गुष्ठेन नखेनेति
यथायोग निर्देशावस्तत्यपितुरमुष्मै स्वधा नमः

इति अवीक्षां दर्शनादेकैवाङ्गुष्ठेन न सप्रदेशेन
पृथक् पृथगेवानुदर्शनं कर्तव्यमिति गम्यते
भुक्तवत्सु ब्राह्मणानां यावत् ऊर्ध्वं निरीक्षते
ती कावदि पितरः इति वचनात् सर्वत्र श्राद्धकर्मणि
कार्पासं सन्तुरतः परिवर्जयेत्। पात्रधारणमपि
तत्पात्रं धारयितुमपि न शक्यते एवं सर्वाण्यपि तेषु
भोजनानि पौरुषान्योवारभ्य भोजयेत् दैवपात्रा-
मिति वचनादत्र वचने सर्वेषां लौकिकभोजनानि
भोजनेन परिहृष्टात्। ब्राह्मणपरित पङ्क्तिपावन-
पार्वेषु नियम होतृनियमेषु पाक्षिकाश्रवणेषु आचार्य-
वचनं राक्षोघ्न कृणुष्व इत्येवमादीनि यज्ञोपवीतादु-
उन्मुख आवृत्तानि श्रावयति अभिश्रवणेन सक्तवादाय-
मनान्तरं तिलोदकं दत्वा शयेषु च पारे सम्मूढे उक्तं
स्त्रैतां श्राद्धे नाके सनीयानीहारे वचनाभिश्रा-
वणान्तरं प्राचीनावीति संस्कारेण तावत्कार्यं दक्षिणा-
भिराराधयतीत्यर्थः अथवा राधयति पूजयतीत्यर्थः
पृथ सुवर्णहिरण्ययोः पृथक् सुवर्णानि सुवर्णं काञ्चनं
हिरण्यस्य रजतमिति गम्यते प्राणिस्पर्शायोग्य-
प्रसादि शुक्लादिति केचित् अन्ये वक्ष्यमाणेभ्योऽन्यत्
प्राणिशब्द वाच्यमिति उष्णाम्बुतरमद्भिश्च लोहकं सतां-

भोयसादिद भाण्डमृन्मयपात्रकमण्डलोर्विशेष-
वचनात् मृन्मय पात्राणां स्थल्यासनं फलकादि
उपधानशिरसं अर्घ्यं चारयित्वोपसङ्गृह्य
पादौ सङ्ग्रहणं कृत्वेत्यर्थः यज्ञोपवीती कृत्वा-
पराङ्गृहणं कर्तव्यं उपसङ्ग्रहणे येहुक्रम।
प्राचीनावीति. स्वधां वाचयित्वेत्यारभ्यते भुक्तवाद्वि-
राभितोरम्यताति (रम्यतां) वक्तव्यम्। मत्वाचार्य आह आह
वशिष्ठश्च स्वदितं वक्तश्चभिसाह तत उक्षोप-
विन्नार्थानीत्यर्थः संसाद्य सन्धानं ब्राह्मणान्-
गमयित्वा पापाद्वासनिमान्तादनुज्ञानाद्गम्यये-
सर्थः। इदानीं देवार्थान् उद्वासयति। सर्वेषां
प्राग्दक्षिणस्कर्तव्यत्वाच्च च पित्रार्थोद्वापनानन्तरमेव देव
अर्थानुद्वापयाति तावता देवसन्तस्य कृतार्थता
भविष्यति अन्नशेषैः पिण्डान्ददाति इष्टैस्सहोद्भ्य
भुञ्जतामिति दर्शनात् भोजनार्थस्य परिशेषात्
उत्तरतः प्रातं गृहीत्वा पिण्डान्दत्वा संक्षालनमिति
वचनात् कस्मिंश्चित्पात्रान्तरे अन्नशेषाणामेकदेशं
गृहीत्वा प्रक्षिप्य तस्मिन् गृहीत्वा तत्पात्रसंक्षालनेन
निरपसव्यः परिषिञ्चेत् ततो यज्ञोपवीतं गृहीत्वा
अपि पूर्ववन्न स्विष्टकृद्धोमानन्तरं औदुम्बरीं दर्वीं
मग्नौ प्रहरतः ततः ऊर्ध्वं प्रयोजनाभावात्।

पशाहोमे ऽतोरिष्टुतत्वाद्दैव श्योभूते मांसशेषेणेति

ऽलमेवैसादेशाचैवां शरदायि वपाहुता कर्तयेति

च यारतादि इत्यादन्ये केवलं मांसश्रपणं वपाया

भावात्तोदेलोपः अत्रै लोपप्रदाहुती नाम भावः पता

यज्ञ वा कार्यः गौरवाङ्ग सामान्यादिति वचनात्तत्र

युक्तो वपाहोमः यद्यपि केवलंमांसश्राद्धः तथापि

द्वयं वपाहोमाहुती ऽवमेवेति देशो न घटते।

तस्मात् पूर्वमेव पक्षो युक्तः आचार्याभिप्रायश्च

सर्वं ऽवमेवेति: देशकृते सर्वत्रावृतावि सैवमेवोत्तरं

पुरोडाशमिति तथा खड्गो महिषवत्पार्श्वे पर्वसु

विद्यते हस्ति सदृशः तमेव शृङ्ग पक्षमाश्रित्य

तिष्ठेच सत्कृराणीति निषादास्सिद्धा इति ऽवं

प्रकारेणेसर्थः। सर्वत्रोपक्रमविशेषज्ञोपसंहारस्य

इत्यादिहापि यदा सप्तपाकयज्ञसंस्था उपक्रान्ता-

तासां सप्तानांप्रकृतानामाधिकरोति निवर्तते

व्याख्याय श्रुतिः ॥

— द्वितीयप्रश्ने ऽकादशोध्यायः —

— श्री लक्ष्मीवेङ्कटेशार्पणमस्तु —

— द्वितीयः प्रश्नः समाप्तः —

——— o ———

— श्रीः —

— "श्री बोधायनाचार्येभ्यो नमः" —

## — "उपाकर्म" —

हुतानुकृतिरुपाकर्म श्रावण्यां पौर्णमास्यां क्रियेतेति पूर्वेणानन्तर्याभावाद्य शब्देन प्रयुक्तः हुतानुकृतिः हुतानुकृतिरुच्यत इति शेषः हुतानुकृतिरस्येवमेव तद्धुतकर्म गृह्णाति दर्शयति हुतधर्मस्ताक्रान्ता न पक्वहोमे इति वचनं यद्धूयत इति वचनात्स्व होम इति वचनमस्त्यस्य पक्व होमोत्ति तद्दर्शयति विभाव आहुतीषु नामकरणादि वचनं प्रदर्शनार्थं न परिसंख्यानं न किञ्चित्पक्व होमादते हुतग्रहणस्य प्रयोजनमस्ति च तस्मात्पक्व होमः कर्तव्यः उपाक्रियन्ते छन्दांसि येन तदुपाकर्म प्रारभ्यते । येनेत्यर्थः । श्रावणेन युक्त चन्द्रमाः यस्यां तिथौ नक्षत्रेण युक्तः कालः इत्यणः श्रावणी तिथौ पौर्णमास्यां तिथौ या तिथिः पौर्णमासी समानाधिकरणस्वादुभाभ्यां वर्तेर्निर्विध्या आषाढ्यां युक्ता पूर्वपदे प्राणप्रत्ययः समानाधिकरणश्च विपरीतनिर्देशः पर्योरप्युपाकर्मकालोस्ति दर्शयति तथाह वाशिष्ठाचार्यः । अथातस्तस्स्वाध्यायोपाकर्म श्रावण्यां पौर्णमास्यां प्रोष्ठपद्यां वेति

अथवा पाकयज्ञं वा पञ्चादिदेशं कुर्वन्ति ब्राह्मण्याः.

प्रोष्ठपदं दर्शयति आपे वेति वाशङ्कान्वयादनुकल्पः ।

इत्यनुगन्तुं न शक्यते । पुरुषार्थत्वाच्चोपितशिक्षा-

र्थत्वं । न कदापि समावर्तते । पुनर्योपाकर्मेति प्रार-

म्भस्यापि दैवकर्मत्वात्पूर्वेद्युर्नान्दीमुखं कृत्वा परेद्युः

तीर्थे स्नात्वा धृतं वासः सन्ध्यायां परिधाय पञ्च्य

मन्त्रवत्प्रोक्षणं कृत्वाथ दैवयजनोल्लेखनप्रभृति

पुंसवनादि संस्कारं कृत्वा द्वावेवानुवर्त्य कृतान्ये नान्दीमुख

पुण्याहे ततो दैवयजनोल्लेखनप्रभृत्याग्निमुखात्कृत्वा

पञ्चाज्जुहोति भूर्भुवस्सुवरोमित्यनुद्रुत्य तत्सवितु-

र्वरेण्यमित्येतस्या वा भ्रातृत्वान्मन्त्रान्ते आज्याहुतीरित्यादि

सर्वभूतेभ्यः स्वाहेति निषादगदः सिद्धः । अत्र

केचिदाहुः सर्वत्रैवाज्याहुतीरिति अनन्तरस्विष्टकृ-

द्दर्शनात् प्रधानसंहितो य कर्तव्यादनुवाकाध्यय-

नापूर्वं स्विष्टकृद्धोम इत्यन्ये आज्याहुत्वा वास्मै

सद्यस्तत्वादन्यत्रे पैतृकवादा शिष्याणां प्राक्

स्विष्टकृतोः ध्वाहस्य वर्मणोऽध्ययनप्रदानत्वादेव-

मेवापरपक्षो युक्तः काण्डर्षीन्वा सर्वान् काण्ड-

र्षीनन्वाकार्येत्यर्थः अनुवाकस्तान् प्राजापत्यस्य

इत्यव्रजेदेति सौम्यस्यापि उदस्तु अनुवाकः ।

स्त्व

आग्नेयस्मात्(?)न्यमानं इत्यनुवाकः। वैश्वदेवस्यानु-
मतौ पुरोडाशमित्यनुवाकः स्विष्टकृत्प्रभृति-
(प्रा)त्सेकमाद्यनुवर्धानात्। अर्थं ब्राह्मणांस्तर्पयन्त-
स्सपूर्वैः धानाभिः सक्तुभिरित्यादि ३ यद्वा आरूपा-
दिभ्यः इत्यर्थः। अपूपादीनां पतुर्णामित्यतम
इत्यर्थः॥ - भुक्त्वार्द्रपाणिर्वीणाशब्दे वैत्यादि
भोजनविधौ पायम्या द्वौ पाणी धारयेदा प्रो-
र्धको भावादेतस्याश्च तस्मिन् काले स्वाध्याय-
विरोधोस्तीति गम्यते अस्तमिते उत्पन्ने विद्युति च
स्नानमध्यायं स्वप्नान्तामिति वचनात्परस्तात्प्रतिबन्धो
नास्तीति गम्यते एवमेव पारायणानीति काठके
पठिता विधिरिति स्वाध्यायब्राह्मण इत्यर्थः।
कारीरिव्रतं कारीर्यध्ययनकाले अध्ययनारम्भादेव-
सादारभ्य च त्रिरात्रं व्रतं चरेदित्यर्थः। अक्षार-
लवणमिति वचनात् भैक्षमिति हविष्यमेव गृहीत्वा-
आचार्यानुज्ञातः पशुवादिति वचनात् अस्येव
(कस्यै) पिण्डस्य कर्तुमशक्यत्वात्(?)तस्मै पितृकुशलाय
पिण्डकारिणे देवदत्ताय प्रयच्छति स देवदत्तः
शुचौ संवृते देशे इति वचनात् गोमयेनोपलिप्ता-
यां भूमौ पिण्डान् कृत्वा निदधाति ब्रह्मचारी

भुञ्जीत पशुवन्मुखेनादनेनेत्यर्थः। न तु हस्तेन गृहीत्वा एवमेव कारणमुक्तं एवमेवान्यदेशात्तु रात्रं व्रतं चरेत्। अक्षारलवणं हविष्यं भुञ्जीत सहो महे सावित्रीभ्यश्च प्रभृत्यश्च ऊर्ध्वं भोजदध्यानुवाकान् सावित्र्यैव युञ्जानः प्रथमं मन इत्यारभ्य सन्तोऽसि वामन्तानि गान्नाधि तेभ्य आरभ्य याजात ओषधय इत्यनुवाकपर्यन्तमधीयानः क्षारलवणवर्ज्यं वा हविष्यमध्ययनादिवसावसानादारभ्य भुञ्जन् च चतूरात्रं व्रतं चरेदित्यर्थः। नान्तं भूमौ भुञ्जीत पशुवदिति यथा प्रकृति द्विजातयो भोक्ष्यन्ते तद्वदेवेत्यर्थः। तृतीये।

## तृतीयप्रथमाध्यायः

अचार्यप्रसूतः आचार्यः प्रोक्तः आचार्यो वै ब्रह्मेति उपनयने आख्यातं आचार्यो वै ब्रह्मेत्युक्तं निर्णीत हेतुकाण्डे काण्डेषु व्रतचर्याकाण्डे चाधीयमानव्रतचर्या कर्तव्येत्यर्थः। सांवत्सरिकैः व्रतैरध्येयानि व्रतैरुपलक्षितो नामाध्ययनानीत्यर्थः गोदानस्यापि सांवत्सरिकैः सति नयानामेव ग्रहणं विधिः प्रकृष्टकालत्वात् गोदानस्येति होतारादि-

ऋउणक्रमार्थं नायस्याकर्षेस्तु मेरस्थानार्थः

होता होतृप्रधानकाले यथोपदेशं प्रधानाहुती-

रिति प्रधानदर्शनाद्धीकाभ्यो होतृभ्यः स्वाहेत्यादिना

होमान्तकाल इति केचिद्धोतृषु सप्तमी पञ्चर्थे

होतॄणां प्रधानकाल इत्यर्थः हुतमध्यास्थितामिति

कालः कालकारस्यातिदेशार्थः अत्र शुक्रियवार्णिकता-

नि चत्वारि व्रतानि उपाकरणकाले सन्निपातिते

उपाकर्मकरणाध्ययनारम्भसामान्ये केनोक्तत्वात्सूर्व-

मुपाक्रियते। ततः काण्डाध्ययनकाण्डोपाकरणयोः

स्वत एव परस्परं बन्धत्वात्काण्डोपाकरणानन्तरं

अध्ययनमारभ्यते। नत्वेवं सति व्रताङ्गस्य

नान्दीमुखादिरुपाकर्मक्रिया व्यवधानं दृश्यते।

अत्रोच्यते। उपाकर्माध्ययनं नान्दीमुखान्यपि

व्रताध्ययनाङ्गमेव तेन स्वाङ्गस्य व्यवधानदोषो

नास्तीति तस्मात्पूर्वेद्युर्नान्दीमुखं कृत्वा परेद्युः

पुण्याहादेः व्यवधानाद्विनापि कर्तुं शक्यते।

उपाकर्मकृत्वा ब्राह्मणानकेन पारावित्येतारभ्य

मन्त्रवर्जितं कृत्वा देवयजनोल्लेखनादिभस्माग्नि-

मुखान्कृत्वा पक्वाज्जुहोतिवचनादाहुतमध्ये पातितत्वात्

हुते पक्वहोम इति वचनात् पक्वाज्जुहोति

भूर्भुवस्सुवरोमित्यनुद्रुत्याप्यस्याप्यनाम्नातमन्त्र-
तारुर्थोपदेशं प्रधानाहुतीर्जुहोतीत्यादि आसमिदा-
धानान्ततो निर्दिष्टत्वात्। अत्र चैकस्य काण्डस्या-
द्योनुवाक इत्युक्तत्वात्। कालाध्ययनप्राप्ते प्राप्ते किं
समिदाधानात् पूर्वमिति सन्देहे समिदाधानस्य
व्रतरूपत्वादुक्तत्वात् व्रतहोमाध्ययनारम्भस्यायुक्तत्वा-
द्यागन्तुकानामन्ते निवेश इति न्यायादुपाकर्मणि च
अनुवाकाध्ययनस्य जयादेरेव पूर्वदृष्टत्वात्समिदाधा-
नानन्तरमेवाग्रेवैवेत्यनुवाकमधीयीत स्विष्टकृत्प्रभृति
सिद्धमाधेनु प्राशयेत मार्जनान्तदक्षिणाग्निं आहुत-
स्तावीर्णा चतानां पलाशपर्णलवखशाश्रयोः प्रथमा
नियम्येति न्यायात् पालाशपर्णेषु हुतशेषं निदधाति
भूर्भुवस्वरों तत्सवितुर्वरेण्यमिति एतेन होमदान-
प्राशनानि व्याख्यातानि भवन्तीति वचनात्।
अत्र केचिदनेन व्याहृत्यादि समुदायस्यानिर्देशात्।
स्वाहाकारेण होमसम्बन्धात्स्वाहाकारवर्जितेनेत्यन्ये
ततः पञ्चादुपादाय प्राश्नाति भूर्भुवस्वरों तत्स-
वितुर्वरेण्यमिति पूर्ववद्देवतापि यद्युवा एतस्मिन्
संवत्सरे नाधीयीतयावदध्ययनमेतद्व्रतं चरेदिति वचनात्
संवत्सरादूर्ध्वमपि व्रतचर्यायाः स्यास्तित्वं दर्शयति।

यावदध्ययनमित्यस्मिन् पक्षे अध्ययनं समाप्यान -
न्तरं देवयजनादि अथ संवत्सरे पर्यवेते ।
अथ शब्दो वाशब्दार्थे अथवेत्यर्थः संवत्सरमधीत्य
शक्त्यादि शिष्यमाचार्यो माणवकमध्यापयते
श्रावयते वा अध्याप्य श्रावयित्वा अथ देवयजनो -
ल्लेखन प्रभृत्याग्निमुखात्कृत्वा व्रतहोम परिह
परिहरणार्थवाग्निमुखानन्तरमेव प्रायश्चित्तं हुत्वा
पक्वाज्जुहोति भूर्भुवस्सुवरोमित्यनुद्रुत्य तत्सवितु -
र्वरेण्यमिति अथ यथोपदेशं गवेत्यारभ्य
व्रतानां व्रतपते व्रतमचारिषं तदशकन्तं न्येश -
न्मृतो निर्गमसिद्धः एवं काण्डविसर्गः ।
एतावदेव नानात्वानुवाक इति वचनात्काण्डाद्यनुवाको
नास्ति । तस्मात् समिधो व्रतविसर्गार्थः आधास्य
स्विष्टकृत्प्रभृति सिद्धमाधेनु वरप्रदानादथाग्नेरग्निं
पलाशपर्णेषु हुतशेषं निदधाति भूर्भुवस्सुव -
रित्यादिना प्रयोगो द्रष्टव्यः । अत्र शुक्रियाणामिति
क्रमाधवचनात्तैत्तिरीयाधर्मनुष्ठानार्थं तेषामिति वचनात्
स्त्रीण्येव व्रतानि चत्वारि आग्नेयमधिकाण्ड -
मधीत्य षोडशवर्षमाकाङ्क्षेदिति तस्य चौल -
वत्सतिपात्रेखरस्तानं चेति चौलवदिति निर्देशात् ।

उलभयीरपः साक्षेपिर्स्रीति कारभ्य बलं तेजाहुवीः
सविती दधात्विसन्तो गह्यते प्रातिपत्तिरारम्भ
इत्यर्थः सर्वान् केशान् सशिखानित्यर्थः। यथा-
परसाम्बवचनात् रित्तौवा प्राबो राड्त्तीयं मुण्डं
तस्मै तद्विधानयचिथकेति सत्रेन यावयनाद्वपनं
शिखाया इति यथापि वचनग्रहणं नदोषः ग्रामन्न
गुरवे वरं ददाति अत्र गोदानस्य कर्मणो यथो
वेदधन्नरन्याग्रामचार्यय देयात्। तत्सम्बन्धात्
कर्म गोदानमित्युच्यते अथ योदिते गोदानोनाम
तत्पुरुषस्समानाधिकरणस्समासः अग्निश्च गोदानश्चेति
तस्य काण्डोपाकरणकाण्डसमापनाभ्यां प्रातिपत्ति
रवसानं तस्य गोदानकर्म इत्यर्थः। प्रातिपत्तिस्ताव-
द्वतानां भिन्नक्रमत्वात्पूर्वेद्युर्नान्दीमुखं कृत्वा परेद्युः
ब्राह्मणानन्नेन परिविष्येत्यारभ्याग्निमुखात्कृत्वा
पक्वाज्जुहोति भूर्भुवस्सुवरों इत्यनुद्रुत्य तत्सवितु-
वरेण्यमिति अथ चतस्र आद्यो देवताभ्यो
गोदानेभ्यः स्वाहेति अथ उत्तरं स्विष्टकृत्प्रभृति
सिद्धमाधेनु वरप्रदानादधाग्नेणाग्नेः पलाशपर्णेषु
हुतशेषं निदधाति। प्रथमायां निगद्य तैः कारणान्तस्यापि
क्रम इति न्यायात्। भूर्भुवस्सुवरोमित्यादिना

अष्टाचत्वारिंशत्संमितमित्युच्यते । अष्टाचत्वारिंश
संवत्सरेण चरितं व्रतं ब्रह्मचर्येण तुल्यमित्यर्थः ।
संक्षेप स्वष्टत्सरं द्वादशादीनां संवत्सरो मध्यमः
पक्ष इत्यर्थः नियममेवेति वचनाल्लोमानि मार्जयित्वा
वपनं कर्तव्यमिति गम्यते स्नानादेर्वचनात्पुरुषस्याधिकं
देवनो चामकाल इत्यवगन्तुं शक्यते आह्वयादेर्वचनात्
इकारार्थत्वाल्लोपलभामहे देवयजनमुदानयतीति तत्र
नाडायास्तु प्रसूतीकर्माणि करोतीत्येवं तदेव अनुवदति
देवयजनोल्लेखन प्रभृत्यग्निमुखात्कृत्वा व्रतदोषपरिहा-
राय प्रायश्चित्तानां नाम्नां तुल्यत्वाद्व्रत प्रायश्चित्तं
हुत्वा पक्वा जुहोति । भूर्भुवस्सुवरों वत्सावितृवरेण्य ।
इत्येतया यथोपदेशमारभ्य व्रतानां व्रतपते इष्टा-
चत्वारिंशत्संमितं व्रतं चरिष्यामीति तच्छकेयं तन्मे
राध्यतां स्वाहेत्यादिर्निगद इत्यर्थः । ततोऽनन्तरं सह
वै देवानामित्यनुवाकमधीत्य स्विष्टकृतादि प्राशना-
त्समानं तुल्यं स्वाहाकारं विनाऽर्थवादित्वाद्योगस्यो-
गः गमनं ये सानुवृत्यानर्थस्तूर यामस्तनेहास्मिन्
प्रकरणात् वक्तव्यः । गुरुनियोगात् गुरुवचनादि
त्यर्थः । तत्कालं तयोः सायं प्रातः कालयोः
भैक्षं भुञ्जीतकाया अनाविलपक्वान्नमिति । इध्मं

का
कामिष्यते सेत् प्रातरिदं प्रशातां मध्यन्दिन-
एमानोपस्पर्शनं कृत्वापराह्णे चतुर्थकालाः
पशुकालोक्तिति वचनादशसु नाडिकासु कन्दमूल
फलमुपयुञ्जीत न राशिं च सायमाशं तथैव च
सद्योपवासो भवति योनुभुङ्क्ते कदाचिदिति
अस्य निरोधो भवति तथाचापस्तम्बः ।
दिवापि भुञ्जता मूलफलेभ्य इति तदपि नोपयुञ्जीति
प्रतिबंधो विप्रतिबंधे सति विकल्पः रभसः
भसनशीलः कामवादीति केचिद्रमेर्भस्वररभसः
कामवादि वेदेति भेदाशनात्कामवादित्वं नोपपद्यते ।
इवं युक्ताः अन्यं सन्निपातसम्बन्धिनः अशक्ताः
पराक्रमे वृद्धतरा इत्यर्थः । संपृणाम्य छावरेरः
कर्तव्यानीति अग्नीन्धनभैक्षयोरनुवर्त्य ब्रह्मचारिणो
विधानार्थं वचनं स्थानासनमिति तिष्ठेत् इति
रात्रौ आसीतेति नैष्ठिकस्यादेवसासामान्यतो
दृष्टेनास्यापि हितमिति केचित् । अन्ये प्रजां
अन्यत्र विहिता मनया व्याहृत्या त्रीणि समाप्नुयात् ।
पराक्रमवानमित्यर्थः चरिति परतमग्नेनयेति
चारीति व्रीआदिनि प्रत्ययः । यस्यां पृथिव्यां
उपविशति यस्मिन् प्रदेशे इत्यर्थः । विजनं गते

इत्यकृतं आचार्ये आचार्यस्य प्रज्ञा इत्यर्थः। एतेन
व्रतचरणेन ग्रन्थान्तराणां व्रतचरणं समापनं
व्याख्यातम्। वेदमधीयीतरमानकसामयजुर्वाकाः
धर्मितार्थः कामशब्दोऽवधारणे अहमस्तीति निपातः
१ लिङ्स्म इति लिङ्प्रत्ययः परोक्षकालेविहितालिङ्प्रत्-
ययात् उक्तवानित्यर्थः ॥ ——

—— तृतीये तृतीयः ——

प्रहुतानुकृतिः प्रहुतविकृतेः आहुतधर्मग्राहीत्यर्थः।
यत्र यस्मिन् वास्तुनि दशाहान्युषित्वा दशभ्यो वोर्ध्वं
योषित्वा सशरः (गृहः) साग्निहोत्रः प्रयास्यन् भवतीति
सम्बन्धः तत्र तत्र वास्तोष्पतीयं पक्वं वास्तोष्पतिः
देवतास्य पक्वस्य द्यावापृथिवी शुनासीर मरुत्वती-
न्द्राः वास्तोष्पते गृहमेधा येति प्रत्ययः। ततः सर्वगवा-
हिताग्निरिति शालीनाअयायावरइति यद्यप्येवमेव
च नाम्नातं सर्वनामत्वात् सर्वविषयं श्रुतिरप्येवमाह।
तस्मात् सर्वागमन्यते मां प्रसुदमादिति यायावर इत्यन्ये-
नाग्निस्थाने तदर्ध्यंवस्येयदुपाकृतमागारमध्यमवस्येत्यर्थः
मिथुनौ भर्वं तामध्यवस्येदिति मिथुनौ सम्भवं तौ विना (धा)
नाग्निवचनमरण्यकाविर्दीस्य गकवचनेन सम्बन्ध इति
प्रत्यासत्त्या तुल्ये यदुपाकृतमस्मादिशब्दो ऽध्याहर्तव्यः।

21/8/71

यत्तु कृतस्यादिसर्थः आक्रियाह्य इति केचिद्वर्ण्ये.
यज्ञाह्यः । उपसर्गमुपालिकाद्यः गृह्याग्निरोपासना-
ग्निरेसर्थः गृहे भवो गृह्यः दिग्वादिभ्यो
(भ्य) यत्स्मा स अग्निरिति प्रागिग्रहणादि रक्षितं परि-
चरेदिति धान्यता वचनात् गृह्य इत्युच्यते ।
तस्मिन् गृह्याणि कर्माणि क्रियन्त इति वचनात्
स गृह्याग्निः वास्तोष्पते प्रतिजानीह्यस्मानिति
पुरोनुवाक्यामनूच्य वास्तोष्पते शग्मया संस-
दात इति याज्यया जुहोति सर्वदार्विहोमेष्विति ।
परिभाषायां पुरोनुवाक्यधर्मधारिणी तस्मात्तस्या-
नुत्तरस्यां विकारवक्षणं कुर्यादिति वचनादुप-
देशं – यतु जुहोमीति एवं प्रणवान्ता पुरोनु-
वाक्ययोरनुक्तं वषट्कार इति वचनाद्धूयं जात-
स्वाहिभिस्सन्दान इति स्वाहाकारान्ता या होमः
एवं सर्वत्र व्याख्येयं स्थाली संक्षालनमाज्यरोह-
माज्यस्थालीगतमुद्दकुशं परिषेचनादि कृत्वा
अवशिष्टं गुणानां च परार्थत्वात् सम्बन्धसमत्वा-
त्स्यादिति न्यायात् । सकृन्मन्त्रकृत्वा तद्वहिरण-
माशिषो वाचयित्वा शिवं वास्तु शिवं वास्त्विति
द्विजचरणदर्शनान्निर्वापयितव्यः । हुत इदं तद्देश-

संस्काररूपेण प्रायश्चित्तानन्दामुखाभावः तदभावे पुण्याहाभावः तीर्थस्नानस्य वारभ्यते ॥

— तृतीये चतुर्थः —

अथ यद्यागार इत्यादि वास्तु कपोतोऽधिपतेत । गच्छेत गौर्वा गामिति नपानानिवृत्तिः सम्बन्धनिवृत्तिः दिवमुल्लिखेदित्यर्थः वाशयेद्धः सूर्यध्वीत्यर्थः । अन्येषु च पूर्वेषु वास्तुविजय एव शास्त्रान्तराणीति कुर्यात्रयौ प्रर्तक इति यथान्यादाशये प्रतिषिध्याति । उन्तरौ गतार्थः ॥

— तृतीये पञ्चमः —

आहुतानुकृतिरित्यादि सहस्त्रं सम्पाता चि हुतं सहस्त्रसम्पातैरभिहितं सहस्त्रशब्दः प्रागदर्शनार्थः । तदाहुतीनामष्टसहस्त्रं सम्पाद्यत इति वचनात तस्य चरोः प्राशनमन्त्रः अगदव्याधिताराष्टभूत नता पदपसयोडा उव्यं पुरो हरिकेश इत्यादय सर्वाहुतीः समीचीनामास्तीति हैतयोर्नामस्येत्यादि अन्ये महात्मानः कूष्माण्डादयः अभ्यर्चितानि ब्राह्मानि चिन्तियाणि अभ्यात्त्वित्यादिनावं आयया आश्रयैस्संश्रया इत्यर्थः । स्नातको ब्रह्मचारी धर्माश्रिमानुष्ठानं करोति धर्मो ब्रह्मचर्याश्रौयादिविधुरो गृहस्थधर्ममनुतिष्ठति

मातामहैभ्यश्चेति वचनात्तावन्मात्रमिति केचिदु-
पलक्षणं। अन्ये स्नानविधौ पठितानां चतुर्थ्यन्ते-
नोक्तस्य स्वधा नमस्कारं राजवत्कल्पयति। इतरैस्तु
ब्रह्मादिभिः फलोदकेन विभक्तिविशेष उच्यते।
ब्रह्माणं तर्पयामि प्रजापतिं तर्पयामि बृहस्पतिं
तर्पयामि अग्निं वायुं सूर्यं चन्द्रमसं नक्षत्राणि
इन्द्रं राजानं यमं राजानवसून् रुद्रानादित्या-
न्विश्वेदेवान् साध्यान् मरुतस्त्वनथर्वणोऽङ्गिरसो
विश्वामित्रजमदग्निभरद्वाजान् गौतमावशिष्ठकश्य-
पानिरुद्धन्धती मगस्त्यं कृष्णद्वैपायनं जातुकर्ण-
तरुक्षं तृणबिन्दुं सामशुष्मिणं राजानं सोम-
शुष्मायणं राजानं वाजश्रवसं बृहदुक्थं
वार्मिणं सनत्कुमारं वामदेवं वार्जितं विराजितं
हर्यश्वं च दमयमुदमयं तृणं त्र्यं तृणं
जयधनं जयं सहं जयं बभ्रुमरुणं त्रिधातुं
अभिरातायपराशरं इन्द्रंमृत्युं कर्तारं विकर्तारं
त्वष्टारं धातारं विधातारं सुश्राव संस्रावितारं
सावित्रीं छन्दांसि ऋग्वेदं यजुर्वेदं सामवेदं
अथर्ववेदं अथर्वाङ्गिरसमितिहासपुराणानि सर्व-
देवजनमानान् सर्वभूतानि वैशंपायनं पुलिङ्गु-

वैतीत्तीरिय उखायोखायानीयं पदकारं कौण्डिन्यं
वृत्तिकारं कण्वं बोधायनं प्रवचनकारिमापस्तम्ब-
सूत्रकारं सत्याषाढं हिरण्यकेशिमाचार्याननुध्वरिते-
सो वाम प्रस्थानवंशस्यानेकपत्नीं पितॄणामुदकतर्पणेम
तुल्यं उपोद्धके उदकसमीपे अधिस्पर्शन्ते । इत्थन्ति
अन्योन्यस्य नामधेयचतुर्थ्यन्तेन सम्वारिबाह्यान्योन्यं
हस्तं गृहीत्वाधोमुदकमुपदत्त नीरुद्धं साघम्य
नीरुधुस नीरूर्ध्वं उदकमुघम्य . यथोपभृते
छन्दसामेवाध्ययनमेवमुत्सृष्टे कल्पकामेवाध्ययनम् ॥

## —— तृतीयेऽष्टमः ——

अष्टकानुकृतिमासिकं तत्पुरस्ताद्व्याख्यातमथाभ्युद-
यिके सूर्यनिमित्ते पूर्वेद्युः श्वः कारिष्यामीति
ब्राह्मणान्निमन्त्रयते । योन्यानि सम्बन्धी श्वो
भूते श्मश्रुकर्माभ्यञ्जन स्नानैः यथोपपातं सम्पूज्य
स्वयं स्नात्वा दैवयजनोल्लेखन प्रभृत्य प्रणीताभ्यः
कृत्वा इध्मसान्नाय्यं च आधिश्रित्य पृषदाज्यं हविरि-
ति वचनात्सिद्धमाज्यान्निर्वापादुभयं पर्यग्निकृत्वाहौ-
दुम्बर्या दर्व्योपघातं जुहोतीति वचनादौदुम्बरीं
दर्वीं स्रुवं दर्व्योः सम्मार्जनं कृत्वा एतस्मिन् पात्रे
आज्यं दधि च संसृज्य सिद्धमन्नमानीय पूर्ववदेव

प्रतिपद्यते इति वचनात्. विश्वेभ्यो देवेभ्यो
ब्राह्मणान्प्रक्षालित पाणिपादानुप आचम्य प्रागग्रा-
न्दर्भानिति वचनात्प्रागग्रादिषूपविश्य गन्धाद्विना
अर्घ्य पात्रेष्वन्यानि निक्षिप्य मन्त्राणामन्मा-
तांस्तु ओमनुदिश्य सौवर्णादीनामन्यतमं पात्रं
प्रोक्षणान्तं कृत्वा तस्मिन् तिरः पवित्रमप आनय-
त्याह । आम आगन्तुनान्दीमुखाः पितरो देवयानां
युष्मं नाममानान्दीमुखेभ्यः पितृभ्यो वो गृह
ब्रामीमध यवानावपति यवोसि सोमदेवत्योऽस्वध
ग्राहे नान्दीमुखान् पितृनिमाल्लोकान्प्रीणयाहिनो
नम इति तिरः पवित्रं मध्वानयति । मधुवाता
नापता यत् इति तिसृभिरनुच्छन्दसं अथैनं
सर्वाभिरङ्गुलीभिः समुदायुह्याभिमृशति निर-
स्तं न मुचेश्शरः सोमस्य त्विषि पाहीति रसीलि
तास्मिंश्चाकेचिद्धापातितं स्यात्तदङ्गुष्ठेन च मध्यना
मया चोपसङ्गृह्येमां दिशं निरस्याति अनेन-
द्रष्टुकामा इति अथाप उपस्पृश्य पुनरेवाभिमृश
ति + शन्नो देवीः अभिष्टय आपो भवन्तु इति अथैतान्गन्धपुष्प-
धूपदीपैरन्न श्यामाँ स्यालङ्कृत्सीतेन फलेनालङ्करोति
पुष्पफलानि मिश्रीयवैरितिलार्थ इति वचनात्.

तिलान् सिकतास्येति अत्र यवान् सिकतान् च
सम्प्रकिरन्त्यपहताः मन्त्र इति अथैनदद्भिरवोक्षति
उदीरतामवर० उन्मक्ष्यमाणान्दीमुखाः पितरः
सोम्यासः० इत्येषिति। अथैना प्रक्षालितपाणिपादा-
नप आचम्य सदर्भेष्वि कूर्मेष्वासनेषूपवेश्य ब्राह्मणा-
नामेकैकस्य हस्तमन्वारभ्य प्राप्नोतु भवानिति
दर्शनात् प्रत्येकं यवोदकस्यापितं पवित्रं ब्राह्मणेभ्यो दत्वा
नान्दीमुखाः पितरः प्रीयन्तामित्यनेन मन्त्रेण यवोदकं
विनयति तेषामेव पाणिषु द्वितीयमपि तूष्णीं सर्वं द्वि-
द्विरिति वचनान्वस्त्रादिभिर्यथोपपातं सम्पूज्य
तयालकृत्स दद्यातीति वचनात् पुनरपि तथैव ददाति।
अथ पृच्छत्युद्धियतामग्नौ च क्रियतामिति आग्निमुखा-
कृत्वा औदुम्बर्यदर्भोपधातं जुहोति नान्दीमुखेभ्यः
पितृभ्यः स्वाहेत्यग्नौ करणमभिक्रेशनामिति वचनात्सर्वा-
स्वाहुतीनामपवादः तूष्णीं सर्वं द्विर्द्विरिति वचनात्
अथ स्विष्टकृतं जुहोत्यग्नये कव्यवाहनाय स्विष्टकृते
स्वाहेति उत्तरार्धं पूर्वार्धे प्रदक्षिणमुपचार इति वचना-
द्धैवमुक्तं भवति। पात्रेष्वन्नादि प्रक्षिप्य दर्भेषु
स्थापयित्वा दर्भैः प्रच्छाद्याभिमृशति। पृथिवीते पात्रं
असितमसिमा नान्दीमुखानां पितृणां श्रेष्ठा अमृत-

अमुष्मिन् लोक इत्येतानि ब्राह्मणेभ्यो दत्वा ब्राह्मणस्याङ्गुष्ठेन अन्नखेनानुदिशति नान्दीमुखेभ्यः पितृभ्यः स्वाहेत्यन्नो करणमनुदेशनमिति वचनात् तूष्णीं द्वितीयं सर्वं द्विर्द्विरिति वचनात् भुञ्जानान् समीक्षेत इत्यादि भुक्त्वा अप आचम्य पूर्ववद्वावः प्रतिगृह्य आशयेषु कुशेषान् सम्प्रकीर्य सङ्कालनेन प्रदक्षिणं परिषिच्य दक्षिणाभिर्यथोपपातं सम्पूज्याथो पात्रेष्वाशयेषु दध्योदनं सम्प्रकिरन्ति । द्विर्द्वि-रथ नान्दीमुखाः पितरः प्रीयन्तामिति वाचयित्वो पराङ्मुख स्वधायै स्थाने मधुमन्निध्ये मधुजनि-त्वे इत्येतद्यजुर्जपित्वा नान्दीमुखाः पितरः प्रीयन्तां इत्यपो निनयति । तेषामेव पात्रेषु द्वितीयमपि तूष्णीं सद्वितीयं सर्वं द्विरिति वचनात् सङ्काल नेन प्रदक्षिणं परिषिञ्चति ऊर्ज्जं वहन्तीरमृतं घृतं मधुपयः किलालं परिस्रुतं स्वधास्थ तर्पयत मे नान्दीमुखान् पितॄन् तृप्यत तृप्यत तृप्यतेति । आश्वायनेषु प्रागग्रान् दर्भान् संस्तीर्य तेषु पृषदा-ज्येनानुप्रहानं कर्तव्यम् । जयप्रभृति सिद्धमाधेनु वरप्रदानात् ॥

--- तृतीये नवमः ---

--- o ---

अथैकोद्दिष्टे बध्वे ऽकमुद्दिश्य यानि श्राद्धानि क्रियन्ते? तान्येकोद्दिष्टानि कानि प्रेतार्थानि तेष्वेकोद्दिष्टेषु विधिर्वक्ष्यते अस्याष्टकानुकृतित्वम् प्राप्ता या प्रतिषिध्यते नैनाग्निकरणमित्युक्तत्वादग्निकार्यं तत्सम्बन्धं च तत्सर्वं लुप्यते ।नाभिश्रावणं भोजनकाले ब्राह्मणाभिश्रावणं न कर्तव्यं नपूर्वमिति इदं निमन्त्रण प्रतिषेध इति केचित् । नान्तरेण निमन्त्रणं सम्भवति। अतो निमन्त्रणं प्रतिषेधानुपपत्तेः । पूर्वशब्देन न स्यात् निमन्त्रणं प्रतिषिध्यते भोजनकाल एव निमन्त्रयेदित्यर्थः। न वैश्वदेवमिति वैश्वदेव प्रतिषेधमिति प्रतिषेधाकृतो वैश्वदेवस्यास्तित्वमस्ति तेन स्वधा नमस्कार इत्यत्र संक्षालनेन मन्त्रस्वधाविकारः। प्रतिषिध्यते। तृप्यध्वमिति सङ्क्षालनमित्यूहः प्रदर्शनमन्त्रविधिः। नमस्कारो लौकिकप्रमाणार्थः होमप्रतिषेध मन्त्रार्थयोरप्राप्तिनिराकरणमन्त्रान्तर विधानादेवमनुदेशो मन्त्राणं च मन्त्रान्तराविधानादेव प्राप्तिर्येषां पठेन उपस्थाने मन्त्रान्तरं नास्ति तेषां तत्रैव तयोः प्रतिषेधः कृतार्थः। तस्यापूप इति भोजनप्राप्तस्यापूपस्य प्रतिषेध प्रसिद्धत्वं समानीयायुग्मान्ब्राह्मणानुपवेश्येति प्रदर्शनार्थानुवाकः। तदानीमेव ब्राह्मणान्

निमन्त्र्य अमुकर्मादिभिः सम्पूज्याक्षय्यो
संभृतेति तिलोदकं निधाय ब्राह्मणाननुपवेश्य
अमुष्मै तृप्तिरस्त्वित्यपः प्रतिमान्यनुज्ञाप्य
प्रथमवर्ज्यं समानीतादन्नात् सकृत् सकृत्
समवदाय दक्षिणतो भस्ममिश्रोल्मुकेषु जुहुयात्होता-
यामुष्मै यमाय च स्वाहेति प्रातिविकृतं
होमं पुनर्विधीयमानो होमो यदुक्तं पूर्वेद्युः
कर्मणि होमस्यार्थं प्रतिषिद्धत्वात् प्रक्षाल्यादिभिः
निपतितम्। पदार्थजातं पारिहार्यविशिष्टं सर्व-
कार्यमिति तदुक्तं हुतशेषमिति च भवति
अस्याधर्मत्वमेव स्थापयति। अथ मांसौदनं
पात्रेषूद्धृत्य विशेषानुपनिक्षिप्य दक्षिणाग्नौ
दर्भेषु सादयित्वा दर्भैः प्रच्छाद्याभिमृशति
प्रेतस्य सेवा इति मन्त्रमूहित्वा याभिमन्त्रितं
अन्नं ब्राह्मणेभ्यः उपनिक्षिप्य अङ्गुष्ठेनअनखेन
अनुदिशेत्। अमुष्मै तृप्तिरस्त्विति ग्रासां पुनः
पाठैः मन्त्रान्तरविधानं नास्ति तेषां अमुष्मा
इत्येतावता वाक्येन मन्त्रः अनभिश्रावयन
भोजयेत् भुञ्जत्सु चरां तेषु शेषान-
सम्प्रकीर्य पूर्ततिलोदकं दत्वा तृप्तिं वाचयित्वा-

उक्था

अर्घ्य

अघोत्य प्रसाध्य प्रदक्षिणीकृत्य शेषमनुज्ञाप्या-
शयेष्वाममुष्मा उपतिष्ठत्विति पिण्डं दद्यात्।
प्रसारणं बहुवचननिर्देश्यादिति। केचित् पिण्ड-
स्याप्रधानसम्प्रदानस्यैवैकत्वात्। शास्त्रान्तरेषु
मानवादिषु एकपिण्डश्रवणादेकान्न कृतम्।
बहुवचनं पुनाशास्त्रमाशय इति यामयपरिसमूहेष्विति
पूर्वेषु कर्मणि वाचनादिह परिसमूहेषु स्थान्यमिति
केचिच्छेषवचनादायार्थानुग्रहाय केचित् परिसमूहति।
तृणव्यस्ते वैतानदेवीकृत्वा केचित्संक्षालनेन परिषिञ्चति।
कृतस्यैव मन्त्रस्योर्ध्वोऽपरे चोदकप्राप्तस्य निवप-
माणं निवपनायेति द्वितीयप्रभृतिर्येकोत्तर वृद्धिः
द्वादशाहन्मरणरात्रं यद्वितीयरात्रिः तिप्रभृदिति
दशाहपरिसमाप्तेरेकोत्तरवृद्धिस्स्यात्केनासौ निधिब्राह्मणे
परिषेचनस्य कृतवादेकोत्तर वृद्धिस्यात्। ब्राह्मणा-
न परिवेषयेदित्यर्थः कथं उक्तेन विधिनेति केचित्।
एकादश्यां एकाश्राद्धमित्युक्तत्वात् अर्वाक् श्राद्धविधानं
नास्ति इत्यर्थः यन्नवं विद्ध्येत ततः उत्तरकालेन
नवश्राद्धं नास्तीत्यर्थः। किमतः शास्त्रान्तरेषु नव-
श्राद्धभोजने उक्तदोषा भवन्तीति एकादश्यां श्राद्धमि-
त्यत्र श्राद्धविधानादिदमेव विधानं ततोर्वागिति

ऊह्याः। तं ज्ञातावीत्यमः अत एव प्रकृतस्य विधानस्य विशेषोक्तिः कृता परमतः स तस्य समेतस्य इति क्त्वा प्रणव प्रति षेधस्तु तदभूतानामपि मन्त्राणां प्रणवं पूर्वत्वमेवेति ज्ञाप्यते। परमतोक्ति द्वारेण कृतः ...... ग समवेतत्वाय वानुष्ठाननादौ प्राप्तस्यायं प्रतिषेधः। पितृत्वमुपपद्यत इति साग्निकायादि योग्यो भवतीत्युक्तम्। भवन्ति चा इमाः अनुकृतीः आख्याताः स्तु उपसंहारः॥ पूर्वापर सम्बन्धार्थः॥

इति तृतीय प्रश्ने शिष्टिव्याख्याने
दशमोऽध्यायः॥

— श्रीः —

शिष्टिस्समाप्तः

— श्रीः —

म० विश्वेश्वर शास्त्री

(यादृशं पुस्तकं दृष्टं तादृशं लिखितं मया।
अबद्धं वा सुबद्धं वा मम दोषो न विद्यते॥)

